श्रीमदान्दतीर्थभगवत्पादाचार्यविरचित:

# || महाभारत तात्पर्य निर्णय: ||

## अथ प्रथमोध्याय:

नारायणाय परिपूर्णगुणार्णवाय
विश्वोदयस्थितिलयोन्नियतिप्रदाय |
ज्ञानप्रदाय विभवधासुरसौख्यदु:ख
सत्कारणाय वितताय नमो नमस्ते || १-१ ||

आसीदुदारगुणवारिधिरप्रमेयो
नारायण: परतम: परमात्स एक: |
संशान्तसंविदखिलं जठरे निधाय
लक्ष्मिभुजान्तरगत: स्वरतोऽपि चाग्रे || १-२ ||

तस्योदरस्थजगत: सदमन्दसान्द्र-
स्वानन्दतुष्टवपुषोऽपि रमारमस्य |
भूत्यै निजाश्रिजनस्य हि सृज्यसृष्टौ
ईक्षा बभूव परनामनिमेषकान्ते || १-३ ||

दृष्ट्वा स चेतनगणान् जठरे शयना-
नानन्दमात्रवपुष: सृतिविप्रमुक्तान् |
ध्यानं गतान्सृतिगतांश्च सुषुप्तिसंस्थान्
ब्रह्मादिकान्कलिपरान्मनुजांस्तथैक्षत् || १-४ ||

स्त्रक्ष्ये हि चेतनगणान् सुखदु:खमध्य-
सम्प्राप्तये तनुभृतां विहृतिं ममेच्छन् |
सोऽयं विहार इह मे तनुभृत्स्वभाव-
सम्भूतये भवति भूतिकृदेव भूत्या: || १-५ ||

इत्थं विचिन्त्य परमस्स तु वासुदेव-
नामा बभूव निजमुक्तिपदप्रदाता |
तस्याज्ञयैव नियताऽथ रमाऽपि रूपं
बभ्रे द्वितीयमपि यत्प्रवदन्ति मायाम् || १-६ ||

सङ्कर्षणश्च स बभूव पुनस्सुनित्य:
संहारकारणवपुस्तदनुज्ञयैव |
देवी जयेत्यनुबभूव स सृष्टिहेतो:
प्रद्युम्नतामुपगत: कृतितां च देवी || १-७ ||

स्थित्यै पुनरस्य भगवाननिरुद्धनामा
देवी च शान्तिरभवच्छरदां सहस्रम् |
स्थित्वा स्वमूर्तिभिरमूभिरचिन्त्यशक्ति:
प्रद्युम्नरूपक इमांश्चरमात्मनेऽदात् || १-८ ||

निर्देहकान्स भगवाननिरुद्धनामा
जीवान्स्वकर्मसहितानुदरे निवेश्य |
चक्रेऽथ देहसहितान्क्रमश: स्वयम्भू-
प्राणात्मशेषगरुडेशमुखान्समग्रान् || १-९ ||

|| १० ||

पञ्चात्मकस्य भगवान्द्विषडात्मकोऽभू-
त्पञ्चद्वयी शतसहस्रपरोऽमितश्च |
एकस्समोऽप्यखिलदोषसमुज्झितोऽपि
सर्वत्र पूर्णगुणकोऽपि बहूपमोऽभूत् ||१-१० ||

निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो
निश्चेतनात्मकशरीरगुणैश्च हीन: |
आनन्दमात्रकरपादमखोदरादि:
सर्वत्र च स्वगतभेदविवर्जितात्मा || १-११ ||

कालाच्च देशगुणतोऽस्य न चातिरन्तो
वृद्धिक्षयौ न तु परस्य सदातनस्य |
नैतादृश: क्व च बभूव न चैव भाव्यो
नास्त्युत्तर: किमु परात्परमस्य विष्णो: ||१-१२ ||

सर्वज्ञ ईश्वरतम: स च सर्वशक्ति:
पूर्णाव्ययात्मबलचित्सुखवीर्यसार: |
यस्याज्ञया रहितमिन्दिरया समेतं
ब्रह्मेशपूर्वकमिदं न त कस्य चेशम् || १-१३ ||

आभासकोऽस्य पवनः पवनस्य रुद्रः
शेषात्मको गरुड एव च शक्रकामौ ।
वीन्द्रेशयोस्तदपरे त्वनयोश्च तेषा-
मृष्यादयः क्रमशः ऊनगुणाः शतांशात् ॥१-१४ ॥

आभासका त्वथ रमास्य मुरुत्स्वरूपा-
च्छ्रेष्ठाप्यजात्तदनु गीः शिवतो वरिष्ठा ।
तस्या उमा विपतिनी च गिरस्तयोस्तु
शच्यादिका क्रमश एव यथा पुमांसः ॥ १-१५ ॥

ताभ्यश्च ते शतगुणैर्दशतो वरिष्ठाः
पञ्चोत्तरैरपि यथा क्रमशः श्रुतिस्थाः ।
शब्दो बहुत्ववचनः शतमित्यतश्च
श्रुत्युन्तरेषु बहुधोक्तिविरुद्धता न ॥ १-१६ ॥

तेषां स्वरूपमिदममेव यतोऽथ मुक्ता-
वप्येवमेव सततोच्चविनीचरूपाः ।
शब्दः शतं दशसहस्रमिति स्म यस्मा-
त्तस्मान्न हीनवचनोऽथ ततोऽग्र्यरूपाः ॥ १-१७ ॥

एवं नरोत्तमपरास्तु विमुक्तियोग्या
अन्ये च संसृतिपरा असुरास्तमोगाः ।
एवं सदैव नियमः क्वचिदन्यथा न
यावान्न् पूर्तिरुत संसृतिगाः समस्ताः ॥ १-१८ ॥

पूर्तिश्च नैव नियमाद्भविता हि यस्मा-
त्तस्मात्समाप्तिमपि यान्ति न जीवसङ्घाः ।
आनन्त्यमेव गणशोऽस्ति यतो हि तेषा-
मित्थं ततः सकलकालगता प्रवृत्तिः ॥ १-१९ ॥

॥ २० ॥

एतैः सुरादिभिरतिप्रतिभादियुक्तै-
र्युक्तैस्सहैव सततं प्रविचिन्तयद्भिः ।
पूर्तेरचिन्त्यमहिमः परमः परात्मा
नारायणोऽस्य गुणविस्तृतिरन्यगा क्व ॥ १-२० ॥

साम्यं न चास्य परमेण च केन चाप्यं
मुक्तेन च क्वचिदतस्त्वभिधा कुतोऽस्य |
प्रायेत चेतनगणै: सततास्वतन्त्रै:
नित्यस्वतन्त्रवपुष: परमात्परस्य || १-२१ ||

अर्थोऽयमेव निखिलैरपि वेदवाक्यै:
रामायणै: सहितभारतपञ्चरात्रै: |
अन्यैश्च शास्त्रवचनै: सह तत्त्वसूत्रै-
र्निर्णीयते सहृदयं हरिणा सदैव || १-२२ ||

'नारायणस्य न सम:' 'पुरुषोत्तमोऽहं
जीवाक्षरे ह्यधिगतोऽस्मि' 'तत्तोऽन्यदार्तम्' |
'मुक्तोपसृप्य' 'इह नास्ति कुतश्च कश्चित्'
'नानेव' 'धर्मपृथगात्मदृगेत्यधो हि' || १-२३ ||

'आभास एव' 'पृथगीशत एष जीवो'
'मुक्तस्य नास्ति जगतो विषये तु शाक्ति:' |
'मात्रा परोऽसि न तु तेऽश्नुवते महित्वं'
'षाड्गुण्यविग्रह' 'सुपूर्णगुणैकदेह:' || १-२४ ||

'माहात्म्यदेह' 'सृतिमुक्तिगते' 'शिवश्च
ब्रह्मा च तद्गुणगतौ न कथञ्चनेशौ' |
' न श्री: कुतस्तदपरे' 'अस्य सुखस्य मात्रा-
मश्नन्ति मुक्तसुगुणाश्च शतावरेण' || १-२५ ||

'आभासकाभासपरावभास-
रूपाण्यजस्त्राणि च चेतनानाम् |
विष्णोस्सदैवातिवशात् कदापि
गच्छन्ति केशादिगणा न मुक्तौ' || १-२६ ||

'यस्मिन्परेऽन्येऽप्यजजीवकोशा'
'नाहं परायुर्न मरीचिमुख्या:' |
'जानन्ति यद्गुणगणान्न रमादयोऽपि
नित्य: स्वतन्त्र उत कोऽस्ति तदन्य ईश:' || १-२७ ||

'नैवैक एव पुरुषः' 'पुरुषोत्तमोऽसा-
वेकः कुतः स पुरुषो' 'यत एव जात्या |
अर्थात् श्रुतेश्च गुणतो निजरूपतश्च
नित्यान्य एव कथमस्मि स इत्यापि स्यात्' || १-२८ ||